ePathshala पाठशाला
A Gateway to all Post Graduate Courses

| | | |
|---|---|---|
| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
| पत्रसंख्या (Paper Number) | 1 | |
| पत्रविषयः (Title) | वैदिकभाषा तथा वाङ्मयं च<br>(Vedic Language & Literature ) | |
| पाठ्यांशसंख्या पाठ्यांशनाम<br>(Module Number & Module Name) | 09, यजुर्वेदस्य परिचयः<br>(*yajurveda :* An Introduction) | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | **१. यजुर्वेदीयप्रतिपाद्यविषयाणां परिचयः।**<br>**२. यजुर्वेदीयभाष्यकाराणां परिचयः।** | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) | |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो.हरिहरत्रिवेदी,<br>आचार्यः, पौरोहित्यविभागस्य,<br>श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | डा. रामानुज उपाध्यायः,<br>सहायकाचार्यः, वेदविभागस्य,<br>श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली<br>110016 | प्रो. पी.एन्.शास्त्री,<br>कुलपतिः,<br>राष्ट्रियसंस्कृतसंस्थानम्<br>नवदेहली |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P1_M9 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

**विषयसूची-**

- प्रस्तावना
- यजु:पदार्थविवेचनम्
- यजुर्वेदस्य महत्त्वम्।
- यजुर्वेदस्य सम्प्रदायद्वयम्
- यजुर्वेदस्य आदित्यसम्प्रदाय:
- यजुर्वेदस्य ब्रह्मसम्प्रदाय:।
- यजुर्वेदस्य शाखा:
- साम्प्रतं समुपलब्धा शाखा:
- शुक्लयजुर्वेदस्य प्रतिपाद्यविषया: शुक्लत्वे हेतुश्च।
- यजुर्वेदीय ब्राह्मणारण्यकोपनिषदां परिचय:।
- आचार्य उव्वटस्य परिचय:।
- आचार्य महीधरस्य परिचय:।
- आचार्य हलायुधस्य परिचय:।
- विषयसंग्रह: (सारांश:)

- **प्रस्तावना–**

अस्माकं भारतीयानां सर्वस्वं हि वेदाः। ते च ऋग्वेद यजुर्वेद सामवेद अथर्ववेदेति नाम्ना प्रसिद्धाः। अत्र इदमप्यवधेयं यदेते चत्वारो वेदाः अनादयः अपौरुषेयाः नित्याश्च सन्ति। इत्यत्र नहि कश्चन सन्देहलेशः।

संसारे यावन्ति शास्त्राणि सन्ति, तेषामध्ययनस्य किमपि किमपि नूनं प्रयोजनं भवत्येव। यतो हि लोकेऽपि ''प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते'' इत्युक्तिः प्रसिद्धा एव। अतः अत्रत्य जनाः यथायथं प्रयोजनमुद्दिश्यैव तत्तत्कार्ये प्रवृत्ताः भवन्ति। परञ्च वेदाध्ययनस्य तादृशं किमपि लौकिकं प्रयोजनं नास्ति। एतस्य इदं तात्पर्यं नास्ति यत् वेदाध्ययनस्य किमपि फलमेव न भवति। फलप्राप्तिः तु भवत्येव। परञ्च जनानां वेदाध्ययने स्वाभाविकी प्रवृत्तिः स्यात् इत्येव निष्प्रयोजनस्य तात्पर्यम्। यथा लोके स्वशिशोः लालने- पालने च मातुः स्वाभाविकी प्रवृत्तिर्भवति न हि तत्र किमपि विशष्टं प्रयोजनं तथैव अस्मिन् भारते लब्धजनुषां जनानां वेदाध्ययने स्वाभाविकी प्रवृत्तिर्भवेदिति धिया एव आचार्य पतञ्जलिना उद्घोषितम् यत् '' निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च।''

सचायं वेदः भारतीयमान्यतानुसारेण सृष्टिप्रपञ्चस्स्य प्राथमिकी वाणी वर्तते। समग्रस्य सर्गक्रमस्य मूलकारणं वेद एव। साम्प्रतिकेऽपि वैज्ञानिके युगे समग्रस्य भूभागस्य प्राचीनतमो ग्रन्थः वेद एव मन्यते। विश्वस्य प्राचीनतम ग्रन्थत्वात् समस्तानां संस्कृतीनाम् उद्गमस्थानं वेद एव। वेदोऽयं सहस्राब्दान् सततं व्याख्यातोऽपि रहस्यगर्भः स्वीयज्ञानगरिम्णा च अद्यापि आदरणीयो विद्यते।

साम्प्रतं सर्वेऽपि जनाः स्वीय इष्टप्राप्त्यर्थं सततं प्रयतमाना दृश्यन्ते। तथैव अनिष्ट निवारणे अपि। परञ्च प्रयासोऽयं सार्थकतां न प्राप्नोति। तत्र कारणमिदमेव यत् इष्टप्राप्त्यर्थं लौकिकोपायान् एव ते वाञ्छन्ति अनुदिनं च अनुतिष्ठन्ति। परञ्च केवलं लौकिकोपायैः इष्टप्राप्तिः अनिष्टपरिहारश्च न सुलभः। एतस्य कृते अलौकिकोपायाः अपि आवश्यका भवन्ति। यदि लौकिकोपायैरेव सुखशान्तिं सुलभा स्यात् तदा साम्प्रतिके समाजे तथाविधा जनाः बहवः सन्ति परञ्च इदं दुर्लभम्। अतः अलौकिकोपायार्थं वेदानां शरणे अवश्यमेव गन्तव्यं भवति। अनेनैव हेतुना आचार्य सायणेन वेदस्य लक्षणं- इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः इति कृतम्। अलौकिकं

यथा स्वर्गः, स चाऽयं स्वर्गः केनोपायेन लभ्यः स्यात् इति जिज्ञासायां, वेदवाक्यान्येव बोधकानि सन्ति, नतु अन्यानि कानिचन लौकिकसाधनानि शास्त्राणि वा। वेदः आज्ञां करोति- दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत अतः दर्शपूर्णमासयागेन स्वर्गप्राप्तिः संभवा। एवम्प्रकारेण लौकिकाऽलौकिा वा ये च कामाः ते च सर्वेऽपि वेदाध्ययनेन सुलभा भवन्ति।

इदं तु सत्यमेव यत् पुण्येन सुखप्राप्तिः पापेन च दुःखम्। यतो हि सुखिनं जनं दृष्ट्वा लोके इदमेव ब्रुवन्ति जनाः यदयं पुण्यशाली भाग्यवानयम्। दुःखिनं च दृष्ट्वा नूनमेव अनेन पापानि विहितानि येन तत्फलं दुःखरूपेण अयं प्राप्नोति। पुण्यं च सुखहेतुकम् इति मत्वा वेदे बहूनि मानव कर्तव्यानि विहितानि सन्ति। तेषु कृत्येषु यज्ञः श्रेष्ठः। तथा चोक्तं महीधराचार्येण स्वभाष्ये चतुर्विधं कर्म- 1. अप्रशस्तम् 2. प्रशस्तम् 3. श्रेष्ठम् 4. श्रेष्ठतमं चेति। तत्र लोकविरुद्धं वधबन्धचौर्यादिकम् अप्रशस्तम्। एतानि कर्माणि सर्वदा त्याज्यानि सन्ति। लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम्। एतानि कर्माणि च लोके स्थिताः सर्वेऽपि जनाः कुर्वन्ति स्वकर्तव्यत्वेन करणीयानि अपि सन्ति। स्मृत्युक्त वापीकूपतडागादिकं श्रेष्ठम्। अर्थात् परोपकाराय स्मृतौ यानि प्रतिपादितानि कृत्यानि सन्ति तानि च जनैः अवश्यमेव कर्तव्यानि। यतो हि इदं श्रेष्ठं कर्म। परञ्चवेदोक्तं यज्ञरूपं कर्म श्रेष्ठतमिति। अतः वेदोक्तयागाः श्रेष्ठतमकर्मरूपेण श्रुतौ श्रुताः। तेनैव हेतुना चतुर्विधानाम् एषां वेदानां प्रवृत्तिः प्रतिपाद्यो वा याग एव।

वेदास्तु यज्ञार्थमभिप्रवृत्ताः इति आचार्य वचनमपि अत्र प्रमाणभूतम्। अतोऽत्र निश्चीयते यत् वेदानां प्रतिपाद्यविषयः याग एव।

अत्र केचिद् आक्षिपन्ति आचार्य सायणं, यत् अनेन स्वभाष्ये वेदानां व्याख्यानं यज्ञपरकमेव कृतम् परञ्च विचार्यताम् तावत् आचार्य सायणात् पूर्वं निरुक्तकारो यास्क अपि यागपरम्परामादृत्य मन्त्राणां व्याख्यानं कृतम्। परम्परां समर्थयन् तेन उक्तं यत् ''पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति।'' अत्रत्य पारोवर्यवित शब्दः काचित् भारतीयपरम्परामेव संकेतयति। तेनात्र निश्चीयते यत् आचार्य सायणोऽपि पूर्वाचार्याणां (स्कन्दप्रभृति) मतमनुसृत्यैव यागानां विधानं स्वभाष्ये कृतवान्। इयमेव भारतीय परम्परानुगुणा व्याख्यानसरणिः।

एवमिह वक्तुं शक्यते यत् यथा श्रौतयागे प्रामुख्येन चत्वारः ऋत्विजो भवन्ति- होता अध्वर्युः उद्गाता ब्रह्मेति भेदेन, तथैव अस्माकं चत्वारो वेदा अपि यथायथं यथासंख्यं च तत्तत्कर्मभिः सह सम्बद्धाः सन्ति। विषयेऽस्मिन् विस्तरेण चर्चा यथाप्रसंगं करिष्यते।

- **यजुर्वेदः**

यजुः पदार्थविवेचनम्-

चतुर्षु वेदेषु यजुर्वेदस्यैव प्राधान्यम्, इति निरूपणात् प्राक् यजुर्वेदशब्दे यजुः शब्दस्य कोऽर्थ इति प्रस्तूयते-

स चायं यजुः शब्दः यज् धातुना सिध्यति। तथा चोक्तं यास्काचार्येण स्व निरुक्तग्रन्थे- 'यजुर्यजतेः' अस्य इदं तात्पर्यं यत् यजुर्वेदे सर्वविधानामपि यागानां वर्णनं विद्यते प्राधान्येन। एतच्च विशेषरूपेण अध्यायगतविषयनिरूपणप्रसंगे प्रस्तोष्यते। अत्र यजुर्वेदस्य प्राधान्यं कथमिति विचार्यते।

- **यजुर्वेदस्य महत्त्वम्-**

''यज्ञस्य मात्रां विमिमीति उ त्वः'' इत्यस्मिन् श्रुतिवाक्येऽपि यज्ञस्वरूपनिर्मापकत्वेन यजुर्वेदस्य प्राान्यम्। आचार्य सायणेनापि विषयेऽस्मिन् उक्तं- भित्तिस्थानीयो यजुर्वेदः चित्रस्थानीयावितरौ । अर्थात् यज्ञस्य आधारः भित्तिरूपः यजुर्वेदः ऋक्सामादयस्तु तदाश्रिता चित्ररूपाः। अतो यज्ञक्रियासु यजुर्वेदस्य अध्वर्युवेदापरपर्यायस्यैव प्राधान्यम्। एवम्प्रकारेण याज्ञिकदृष्ट्या यजुर्वेदस्य अभ्यर्हितत्वं सुप्रसिद्धमस्ति। अत्र अयमपि अपरो हेतु यत् आचार्य सायणेन सर्वादौ यजुर्वेदस्यैव भाष्यं कृतवान्। विशेषरूपेण अस्य चर्चा वेदभाष्यभूमिकायाम् अस्ति।

स चायं यजुर्वेदः अध्वर्यवेदेनापि ज्ञायते। इत्यत्र इदमेव कारणं यत् श्रौतयागे चतुर्षु ऋत्विग्विशेषेषु अध्वर्योरेव प्राधान्यं भवति। स चाध्वर्युः यज्ञस्य नायको भवति। नायकस्य प्राधान्यं तु (नाटकादिषु) सर्वविदितमस्ति। अतः यागेऽपि अध्वर्योः प्राधान्यात् अस्य वेदस्य नाम अध्वर्युवेदः अस्ति।

एवमिह निश्चीयते यत् चतुर्षु वेदेषु याज्ञिकदृष्ट्या प्राधान्यं यजुर्वेदस्य अस्ति। अथ च इज्यते अनेन इति यजुः इति व्युत्पत्या यजुर्वेदेन यज्ञयागादयो विधीयन्ते । अतो यजुर्वेदे

दर्शपौर्णमासयागादारभ्य प्रवर्ग्ययागपर्यन्तं मन्त्रा अत्र व्याख्याता: सन्ति। ऋग्भाष्यारम्भे आचार्य सायणेनापि प्रोक्तम्-

आध्वर्यवस्य यज्ञेषु प्राधान्यात् व्याकृत: पुरा।
यजुर्वेदोऽथ होत्रार्थमृग्वेदो व्याकरिष्यते।। अस्तु।

- **यजुर्वेदस्य सम्प्रदाय:-**

यजुर्वेदस्य द्वौ सम्प्रदायौ स्त:। 1. ब्रह्मसम्प्रदाय: 2. आदित्यसम्प्रदायश्च। ब्रह्मसम्प्रदायस्य इदं तात्पर्य यत् भगवान् नारायण: ब्रह्मणो हृदि वेदं विस्तारितवान्। अत्र प्रमाणं श्रीमद्भागवते एवं सम्प्राप्यते-

"तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरय:" श्लोकेऽस्मिन् ब्रह्मपदेन वेदस्यैव बोधो जायते। यतोहि ब्रह्मशब्द: वेदशब्दस्य अपरपर्यायभूत:। तेनात्र भगवान् नारायण: आदिद्रष्टावेदानाम्। तत: व्यासशिष्यप्रशिष्यै: अध्ययनाध्यापनक्रमेण साम्प्रतमपि श्रुतिपरम्परया गुरुमुखोच्चारणोच्चारणपरम्परया च सचायं सम्प्रदाय: सततं प्रचाल्यमान: अस्ति। ब्रह्मसम्प्रदायस्य प्रतिनिधि: कृष्णयजुर्वेद: अस्ति।

आदित्य सम्प्रदायस्य प्रतिनिधि: शुक्लयजुर्वेद:। यथाचोक्तं शतपथब्राह्मणे- आदित्यानीमानि शुक्लानि यजूँषि वाजसनेयेन याज्ञवल्क्येन आख्यायन्ते। (श.ब्रा. 14-9-5-33) अत: आदित्यसम्प्रदायस्य प्रतिनिधि: शुक्लयजुर्वेद: अस्ति।

अत्र इदमप्यवधेयं यत् वेदात्मा खलु भगवान् सूर्यनारायण:। महर्षि याज्ञवल्क्य: केनापि हेतुना गुरो वैशम्पायन कोपात् तदधीतां विद्यां तत्याज। पुन: केनापि पुरुषेण (मानवेन) वेदान् नाहं पठिष्ठामि इति संकल्प्य, भगवत: सूर्यनारायणस्य सन्निधौ वेदाध्ययनाय गतवान् प्रार्थनां च ते चक्रु:। सन्तुष्टो हि मार्तण्ड: चतुरो वदान याज्ञवल्क्यम् अध्यापयत्। अर्थात् चत्वारोऽपि वेदा: स्वगुरो: सूर्यस्य सकाशाद् याज्ञवल्क्येन अधीता:। तथा चोक्तं श्रीमद्भागवते-

एवं स्तुत: स भगवान् वाजिरूप धरो हरि:।
यजूँष्ययातयामानि मुनयेऽदात् प्रसादत:।।
यजुर्भिरकरोच्छाखा दश पञ्च च तर्विभु:।
जगृहुर्वाजसन्यस्ता: काण्वमाध्यन्दिनादय:।। (श्रीम.भा. 12.73.74)

अतोऽत्र निश्चीयते यत् कृष्णयजुर्वेदः ब्रह्मसम्प्रदायस्य प्रतिनिधिः, शुक्लयजुर्वेदश्च आदित्यसम्प्रदायस्य प्रतिनिधिः।

अनयोः शुक्लत्वकृष्णत्वमुद्दिश्य शास्त्रेषु बहुविधानि तर्काणि प्रदत्तानि सन्ति। विस्तरभयात् तानि अत्र न दीयन्ते। परञ्च प्राधान्येन यदुच्यते विषयेऽस्मिन् तत् इदमेव यत् कृष्णयजुर्वेदे मन्त्रैः सह ब्राह्मणानि विनियोगादीनि च पठितानि सन्ति। पुनरपि क्वचिद् हौत्रं कर्म, क्वचिच्च आध्वर्यवं कर्म, इति अव्यवस्था, संकीर्णता चात्र प्रतीयते। तेनैव हेतुना कृष्णत्वम्।

अथ च शुक्लयजुर्वेदस्य शुक्लत्वे इदमेव प्रधानं कारणं यत् मन्त्राः पृथक् सन्ति, ब्राह्मणानि पृथक्। एतावता अस्य शुक्लत्वम् असंकीर्णतया निर्दुष्टम्। तथाचोक्तम्–

आध्वर्यवं क्वचिद् होत्रं क्वचिदित्यव्यवस्थया।
बुद्धिमालिन्य हेतुत्वात् यजुःकृष्णमितीर्यते।।

सम्प्रदायनिरूपणानन्तरं यजुर्वेदस्य शाखा विषये किमपि उच्यते।

- **यजुर्वेदस्य शाखा**–

अत्र शाखा शब्दस्यापि अर्थः प्रसंगतः क्रियते। यतो हि लोके शाखा शब्दस्य अर्थः अवयव रूपेण स्वीक्रियते। यथा कस्यापि विश्वविद्यालयस्य अत्र शाखा अस्ति। प्रधानं केन्द्रं तु अन्यत्र परञ्च तत्र यानि कानि कार्याणि भवन्ति तानि सर्वाणि मुख्यकेन्द्रेण सम्बद्धानि सन्ति। वृक्षावयवे शाखा शब्दः तु प्रसिद्धः इति सर्वे जानन्ति। परञ्च तथा अत्र नास्ति। अत्रत्य वेदशाखाavबोधकस्य शाखा शब्दस्य अयमर्थः– शाखति व्याप्नोति धर्मोत्पादिकां क्रियां सा वेदवाणी शाखा।

यथा रामायण महाभारतादिषु काण्डपर्व इति पदेन जनैः अवयवार्थाः एव गृह्यन्ते । न तु तत्र एक काण्डस्य अध्ययनेन सम्पूर्णं रामायणं विज्ञातुं शक्यते। तस्य कृते सर्वाणि काण्डानि पठितव्यानि भवन्ति। तेनैव रामायणस्य पाठः पूर्णतां प्राप्नोति। यतो हि रामायणस्य काण्डादयः अवयवाः सन्ति।

वैदिक शाखाविषये तु भिन्न एव क्रमः। वैदिकशाखासु अवयवत्वं नास्ति। अस्य तु एकैका शाखा स्वापेक्षितपदार्थबोधनाय पूर्णा। अर्थात् एकैका शाखा स्वतन्त्रतया वेद इति याज्ञिकानां सिद्धान्तः।

अत्र आक्षेप: क्रियते यदि यावत्य: शाखा: सन्ति ताश्च सर्वा अपि वेदपदेन बोध्या भवन्ति चेत् तर्हि चत्वारो वेदा: इति कथमुचितम् ? अर्थात् यथ्ज्ञा एकशतमध्वर्यु शाखा'' अत्रैव एकशतं वेदा: कथं न जना वदन्ति ? अस्य समाधानमित्थं करणीयम्।

संसारे यावत्य: वेदस्य शाखा: समुपलभ्यन्ते अथवा इत: पूर्वं विलुप्ता: तासु सर्वासु शाखासु चत्वार: एव विषया: प्रतिपादिता: सन्ति। न तु न्यूनं नाधिकं वा। आवाहनादि स्तुतिरूप:। यागबोधकक्रियाकलापरूप:। स्तोत्रादि गानरूप:। तथा च ऐहिकामुष्मिकोपायरूप:। एवं यथाक्रमं वेदानां तत्तच्छाखासु इमे एव विषया निरूपिता:। अत: सर्वं सम्मिल्य चतुर्षु वेदेषु तच्छाखासु च इमे एव विषया वर्णिता: सन्ति। अत एव चत्वारो वेदा इति व्यवहार: शास्त्रेषु दृश्यते।

अतोऽत्र संक्षेपेण एवं वक्तुं शक्यते यत् प्रत्येका शाखा स्वस्मिन् पूर्णा अस्ति। तस्या: कृते अन्य शाखाया: अपेक्षा नास्ति। नैरपेक्षत्वात् अवयवरहितत्वाच्च शाखा शब्द: वेदपदेनापि वक्तुं शक्यते एव। अस्तु।

इत: परम् यजुर्वेदस्य कति शाखा: सन्ति? इति विषयमुद्दिश्य किञ्चिद्विचार्यते।

इत: प्राक् शुक्लकृष्णभेदेन यजुर्वेद: द्विधा विभक्त: इति मया उक्तम्। तत्रादौ अत्र शुक्लयजुर्वेदस्य यावत्य: शाखा आसन् तासां सर्वासामपि नामानि प्रस्तूयन्ते। विषयेऽस्मिन् विविधपुराणादिषु विभिन्ना: संख्या: श्रूयन्ते। पुनरपि अत्र एकं प्रामाणिकं पक्षमाश्रित्य उच्यते।

महर्षि याज्ञवक्ल्य: सूर्यात्प्राप्तं शुक्लयजुर्वेद: पञ्चदशशिष्येभ्य: अध्यापयत्। ते च पञ्चदशशिष्या: स्वस्वपठितं शाखात्मकं वेदभागं स्वशिष्येभ्य: पाठयामासु:। शाखापाठस्य आद्यप्रवचनकृत: पञ्चदश शिष्या: आसन् तेषामेव नामधेयेन ता: शाखा: संकेतिता:। ता एव पञ्चदश शाखा: शुक्लयजुषां चरणव्यूहे अन्यत्र च उक्ता: सन्ति।

आचार्य सायणेन काण्वसंहिताभाष्योपक्रमणिकायाम् एतासां नामानि एवमुपदिष्टानि।

1. काण्वा: 2. माध्यन्दिना:3. शापेया: 4. तापायनीया:5. कापाला: 6. पौण्ड्रवत्सा: 7. आवटिका: 8. परमावटिका: 9. पाराशर्या: 10. वैधेया: 11. वैनेया: 12. औधेया:
13. गालवा: 14. वैजवा: 15. कात्यायनीयाश्च।

वायुपुराणेऽपि एवमेव नामानि प्राप्यन्ते। विस्तरभयादत्र नैव लिख्यन्ते।

- **कृष्णयजुर्वेदस्य शाखा-**

चरणव्यूहग्रन्थानुसारेण कृष्णयजुर्वेदस्य षडशीति शाखाः आसन्। कालान्तरे च काश्चित् विलुप्ता काश्चिच्च लुप्तप्राया एव दृश्यन्ते। काचिच्च उलभ्यन्ते।

अत्र परिचयप्रसंगहेतुना कासाञ्चित् शाखानां नामानि अत्र प्रदीयन्ते। एताश्च भारतीयसंस्कृतिकोषकारेण स्वीकृताः।

| | | | | | |
|---|---|---|---|---|---|
| 1.चरक | 2. कठ | 3. प्राच्यकठ | 4. कपिष्ठलकठ | 5. चारायणी | 6. वारायणीय |
| 7. श्वेताश्वर | 8. मैत्रायणी | 9. मानव | 10. वाराह | 11. दुन्दुभः | 12. छागलेयः |
| 13. हारिद्रवीय | 14. श्यामायन | 15. तैत्तिरीय | 16. औरवेय | 17. खाण्डिकेय | 18. आपस्तम्ब |
| 19. भारद्वाज | 20. हिरण्यकेशी | 21. बौधायन | 22. सत्याषाढ | 23. वैखानस | 24. बाधूल |
| 25. कौण्डिन्य | 26. हारीत | | | | |

एताः षड्विंशति शाखाः प्राधान्येन अत्र प्रस्तुताः सन्ति। आसु शाखासु कासाञ्चित् ब्राह्मणं कासाञ्चित् उपनिषद् कासाञ्चिच्च आरण्यकमुपलभ्यते। एतेनैव प्रतीयते यत् आसां शाखानां सत्ता इतः पूर्वम् आसीत्। कालक्रमेण ताश्च विलुप्ता जाताः।

साम्प्रतं समुपलब्धशाखानां परिचयः-

साम्प्रतं शुक्लयजुर्वेदस्य शाखाद्वयमुपलभ्यते 1. काण्वशाखा 2. माध्यन्दिन शाखा च। तथैव कृष्णयजुर्वेदस्य चतस्रः शाखाः प्राप्यन्ते। 1. तैत्तिरीयशाखा 2. मैत्रायणीय शाखा 3. काठकशाखा 4. कपिष्ठलकठशाखा चेति।

- **शुक्लयजुर्वेदीयशाखयोः प्रतिपाद्यविषयाः-**

तत्रादौ माध्यन्दिनीय संहितायाः प्रतिपाद्यविषयाः प्रस्तूयन्ते। अत्र इदमप्यवधेयं यत् शाखा संहितयोः नहि कश्चन भेदः। अतः शाखा संहितयोरुभयोरेव व्यवहारः शास्त्रेषु दृश्यते। अस्याः अपरं नाम वाजसनेयी संहिता अपि अस्ति। अतः भ्रमो नैव करणीयः। अस्यां संहितायां चत्वारिंशत् अध्यायाः वर्तन्ते। तत्र सर्वादौ प्रथमद्वितीयाध्याययोः दर्शपूर्णमासेष्टि सम्बद्धा मन्त्राः। तृतीयेऽध्याये अग्निहोत्र चातुर्मास्ययागीयमन्त्राणां सङ्कलनमस्ति।

चतुर्थमारभ्य अष्टमाध्यायपर्यन्तम् अग्निष्टोमयागस्य वर्णनं विद्यते। नवमदशमाध्याययोः वाजपेय-राजसूययागसम्बद्धाः मन्त्रा सन्ति। एकादशाद् अष्टादशाध्यायपर्यन्तं अष्टसु अध्यायेषु अग्निचयनयागीय सम्बद्धाः मन्त्राः सन्ति। मध्ये एव

षोडशेऽध्याये शतरुद्रियहोममन्त्रा संकलिताः सन्ति। एकोनविंशमारभ्य अध्यायत्रये सौत्रामणीयागसम्बद्धाः मन्त्राः सन्ति। द्वाविंशाध्यायतः पञ्चविंशं यावत् सार्वभौमक्षत्रियराजैकमात्रकर्तव्यस्य अश्वमेधयागस्य वर्णनं कृतमस्ति। ततोऽध्यायचतुष्टये एकोनत्रिंशत् यावत् खिलमन्त्राणां संग्रहः त्रिंशत्तमे अध्याये पुरुषमेधयागस्य वर्णनं विद्यते। एकत्रिंशत्तमः पौरुषाध्यायः सुप्रसिद्धः। इत अग्रे अध्यायद्वयेन सर्वमेधयागस्य वर्णनं विद्यते। हिरण्यगर्भसूक्तमपि एतदन्तर्गतम चतुस्त्रिंशत्तमेऽध्याये शिवसङ्कल्पसूक्तमस्ति। पञ्चत्रिंशत्तमे पितृमेधः वर्णितः। षट्त्रिंशमारभ्य अध्याय चतुष्टये प्रवर्ग्य यागस्य वर्णनं वर्तते। अन्ति चत्वारिंशत्तमे अध्याये ईशावास्योपनिषद् उपदिष्टा।

एवम्प्रकारेण माध्यन्दिनसंहितायाः विषयाः संक्षेपेण प्रस्तुताः। अत्र 303 अनुवाकाः 1975 कण्डिकाश्च सन्ति। काण्वसंहितायामपि चत्वारिंशत् अध्यायाः सन्ति। 328 अनुवाकाः 2086 च मन्त्राः सन्ति। काण्वसंहिताया अपि प्रतिपाद्याविषया माध्यन्दिन शाखा इव सन्ति। केवलं मन्त्रक्रमे अध्याये च कश्चन भेदः अस्ति।

शुक्लयजुर्वेदीय काण्वमाध्यन्दिन शाखयोः प्रतिपाद्यविषयनिरूपणानन्तरं कृष्णयजुर्वेदीय सम्प्राप्तशाखानां काण्डादि संख्यानि प्रतिपाद्य विषयाः यथाक्रमं विवेच्यन्ते। तत्रादौ तैत्तिरीयशाखा-

अस्यां संहितायां सप्त (7) काण्डानि चतुश्चत्वारिंशत् (44) प्रपाठकाः, एकत्रिंशदुत्तरषट्शतकम् (631) अनुवाकाः, अष्टनवत्युत्तरशतकोत्तरद्विसहस्र (2198)संख्याकाः मन्त्राः सन्ति।

अत्र मन्त्रैः सह ब्राह्मणानि सम्मिलितानि सन्ति। अस्याः संहितायाः स्वकीया ब्राह्मण-आरण्यक-उपनिषद-श्रौतसूत्र-गृह्यसूत्रप्रभृतयोः ग्रन्थाः अक्षुण्णाः सन्ति। आचार्य सायणस्य इयं स्वकीया शाखा अस्ति।

शुक्लयजुर्वेदे वर्णितविषयाणामिव अस्याः विषयाः सन्ति। यथा दर्शपूर्णमास अग्निष्टोम, अग्निहोत्र, आधान, पुनराधान, वाजपेय, राजसूयादियागाश्च वर्णिताः सन्ति।

साम्प्रतं आचार्यसायणस्य भाष्यं समेषु सम्बद्धग्रन्थेषु प्राप्यते। अस्यां शाखायाम् अधियज्ञार्थात् अतिरिक्तः आध्यात्मिक- आधिदैविकपक्षयोरपि मन्त्राणामर्थो यत्र तत्र प्राप्यते।

- **मैत्रायणीशाखा-**

कृष्णयजुर्वेदस्य अन्यतमा शाखा मैत्रायणी शाखा। इयं संहिता गद्यपद्यात्मिका। चतुर्षुकाण्डेषु इयं विभक्ता अस्ति। अत्र चतु:पञ्चाशत् (54) प्रपाठका:, 3144 संख्याका: मन्त्रा: सन्ति। अत्रापि यथाक्रमं दर्शपूर्णमास- अध्वर- आधान- पुनराधान- चातुर्मास्य- वाजपेयप्रभृतयो यागा: वर्णिता: सन्ति।

- **कठसंहिता-**

कृष्णयजुर्वेदस्य इयं तृतीया शाखा। ग्रामे-ग्रामे कठ कालापकं च" इतिमहाभाष्यकारवचनेन इदं प्रतीयते यत् प्राचीनकाले अस्या: विपुलप्रचार: आसीत् येन कठसंहिताया: पठन पाठनं प्रतिग्रामम् आसीत्।

अस्यां संहितायां पञ्च खण्डानि सन्ति। 1. इठिमिका 2. माध्यमिका 3. ओरिमिका 4. याज्यानुवाक्या 5. अश्वमेधीयानु वचनञ्च। सम्पूर्णोऽपि ग्रन्थे 40 स्थानका: 13 अनुवचनानि त्रयश्चत्वारिंशदधिकाष्टमशतम् (843) अनुवाका: मन्त्राणां संख्या एकनवत्यधिकत्रिसहस्रम् इति। मन्त्रब्राह्मणयो: सम्मिलिता संख्या अष्टादशसहस्रपरिमिता अस्ति। अत्रापि पुरोडाश अध्वरवाजपेय-राजसूयादियागानां विस्तृतं वर्णनमस्ति। इदमत्रावधेयं यत् कृष्णयजुर्वेदस्य संहितासु न केवलं स्वरूपत: एव एकरूपता अपितु प्रतिपाद्यविषयेषु तन्निष्पादकमन्त्रेष्वपि अस्ति।

- **कपिष्ठलकठसंहिता-**

चरणव्यूहग्रन्थानुसारेण चरकशाखान्तर्गते कठानां प्राच्यकठानां कपिष्ठलकठानां च उल्लेखो प्राप्यते। येन शाखासम्बन्धस्य परिचयो भवति।

कपिष्ठल: एक ऋषि: आसीत्। अस्योल्लेख: आचार्यपाणिनि: "कपिष्ठलोगोत्रे" इत्येतस्मिन् सूत्रे कृतवान्। यास्काचार्येणापि स्वात्मानं "कपिष्ठलो वासिष्ठ:" इति कथितम्। अस्तु।

अस्या: शाखाया: एका एव प्रति: साऽपि अपूर्णा एव उपलब्धा भवति। काठक शाखा इव इयमपि शाखा परमस्य स्वरांङ्कनपद्धति: ऋग्वेदेन सह मिलति। ऋग्वेद इव अयमपि ग्रन्थ: अष्टकेषु अध्यायेषु च विभक्तो वर्तते।

अष्टाचत्वारिंशदध्यायेन ग्रन्थोऽयं पूर्णतामुपैति।

एवमिह कृष्णयजुर्वेदीया चतसृणां शाखानां सम्प्राप्त अनुवाककाण्डादि-संख्याविवरणपुरस्सरं तत्प्रतिपाद्यविषयाश्च समासेन अत्र प्रस्तुताः सन्ति।

कृष्णयजुर्वेदः-तैत्तिरीय-मैत्रायणी-कठ-कपिष्ठलकठ

शुक्लयजुर्वेदः-वाजसनेयसंहिता(माध्यन्दिनसंहिता)-काण्वसंहिता

- **यजुर्वेदीय ब्राह्मणारण्यकोपनिषदां परिचयः-**

कृष्णयजुर्वेदस्य - (क) तैत्तिरीयं ब्राह्मणम् - त्रिषुकाण्डेषु विभक्तः

(ख) मैत्रायणीब्राह्मणम्- इदं ब्राह्मणं संहितायाः चतुर्थोऽध्याय एव। अस्मिन् ब्राह्मणे पर्वतोपाख्यानम् रात्रेरुत्पत्यादि उपाख्यानानि वर्णितानि सति।

अनयोः ब्राह्मणयोः संहितोक्तयज्ञयागादीनां सहेतुकं विवेचनं वर्तते। इदं ब्राह्मणद्वयं साम्प्रतमपि उपलभ्यते। अस्याः शाखायाः च ये ब्राह्मणग्रन्थाः अपूर्णा अप्रसिद्धाश्च सन्ति। तेषां नामानि अत्र न दीयन्ते प्रयोजनाभावात्।

शुक्लयजुर्वेदस्य काण्वशाखया सम्बद्धं शतपथब्राह्मणं, माध्यन्दिन शाखया सम्बद्धं शतपथब्राह्मणं च साम्प्रतं सम्प्राप्यते। अर्थात् यजुर्वेदस्य उभयोः शाखयोः (काण्वमाध्यन्दिनशाखयोः) शतपथब्राह्मणमुपलब्धमस्ति।

माध्यन्दिनशतपथे चतुर्दश काण्डानि सन्ति अध्यायाश्च एकशतम्। 68 प्रपाठकाः, 438 ब्राह्मणानि च सन्ति। अस्मिन् ब्राह्मणे दर्शपूर्णमास अग्निहोत्र चातुर्मास्यादियागप्रभृति प्रवर्ग्ययागपर्यन्तं वर्णनं प्राप्यते। आचार्य सायणस्य भाष्यमिह सम्पूर्णेऽपि ग्रन्थे राजते।

काण्वशतपथब्राह्मणे सप्तदशकाण्डानि सन्ति। चतुरुत्तरशतमध्यायाः (104) 6806 कण्डिकाश्च सन्ति। अस्मिन् ब्राह्मणेऽपि शतपथ (माध्यन्दिन) ब्राह्मणवत् एव यागादीनां विधानं वर्तते। अतएव एतत् प्रतिपाद्यविषयाणां संकेतो नैव मया कृतः।

शुक्लयजुर्वेदस्य आरण्यकं बृहदारण्यकम्। अस्मिन् आरण्यके षड् अध्यायाः सन्ति। तथा च चतुश्चत्वारिंशत् (44) ब्राह्मणानि सन्ति। इदमारण्यकमाध्यन्दिनशाखया सम्बद्धमस्ति। अत्र ब्रह्म-आत्मा-पुनर्जन्म-सन्यासादि विषये विस्तृतं वर्णनं समुपलभ्यते। इदं च शतपथब्राह्मणस्य अन्ते प्रोक्तमस्ति। अर्थात् शतपथस्य अन्तिमो भागः।

एवमेव काण्वशतपथब्राह्मणस्यापि आरण्यके षड् अध्यायाः सन्ति तथा च 47 (सप्तचत्वारिंशत्) ब्राह्मणानि सन्ति। अत्र "ब्राह्मणानि" इति पदं ब्राह्मणग्रन्थस्य अवयवबोधकं, यथा ग्रन्थे सर्ग पर्वाध्यायादयो भवन्ति तथैव ब्राह्मणे ब्राह्मणानि भवन्ति।

अत्रापि पूर्वोक्ता एव विषया: वर्णिता: सन्ति। तेनात्र संक्षेपेण परिचयं प्रदाय कृष्णयजुर्वेदस्य आरण्यकानां नामानि अत्र प्रस्तूयन्ते।

तैत्तिरीयारण्यकम्- अस्मिन्नारण्यके 10 प्रपाठका: सन्ति। अनुवाकाश्च अशीति संख्याका:। एकमपरमपि मैत्रायणीयारण्यकमस्ति। अत्र सप्त प्रपाठका: सन्ति। अस्तु।

शुक्लयजुर्वेदस्य प्रसिद्धमुपनिषद्वयमस्ति। ईशावास्योपनिषद् बृहदारण्यकोपनिषच्च। कृष्णयजुर्वेदस्य- तैत्तिरीयोपनिषद् कठोपनिषत् श्वेताश्वरोपनिषच्चेति तिस्र: उपनिषद: सन्ति।

एवं कृष्णयजुर्वेदीय ब्राह्मणारण्यकोपनिषदां परिचयं संक्षेपेण प्रदाय वेदभाष्यकर्तृणां परिचय: यथामति प्रस्तूयते।

- **आचार्य उव्वटस्य परिचय:-**

शुक्लयजुर्वेदसंहिताया: भाष्यकार: आचार्य उव्वट:। अयमाचार्य: ख्रीष्टीय एकादशशतकस्य पूर्वार्द्धे 11 शताब्द्याम् बभूव इति ऐतिहासकाराणां मतमस्ति। एकत्र उल्लेख: यत् अवन्त्यां (उज्जयिन्यां) वसता तेन भाष्यनिदं निरमायि। अस्य भाष्यं लघ्वक्षरोऽपि सन् अतीव प्रोज्वलं सरलं प्रामाणिकञ्च अस्ति। भाष्येऽस्मिन् अनेकमन्त्राणाम् अध्यात्मपरकोऽपि अर्थ: तेन कृत:। अनेनेदं प्रतीयते यत् मध्ययुगस्य एक: नितान्त प्रौढवेदज्ञ: अयम् आसीत्।

एषां कृतय: अधोलिखिता: सन्ति- 1. ऋक्प्रातिशाख्य- टीका 2. यजु: प्रातिशाख्य- टीका 3. ऋद् सर्वानुक्रमणी-भाष्यम् 4. ईशोपनिषद्भाष्यञ्चेति। एते ग्रन्था: प्रसिद्धा: प्रकाशिताश्च।

- **आचार्य महीधरस्य परिचय:-**

आचार्य महीधरस्य जन्म काश्यामेव जातम्। नागरब्राह्मणवंशीय: इमे आसन्। काश्यामेव अध्ययनं विधाय यजुर्वेदस्य (शुक्ल) ''वेददीप'' नाम्ना भाष्यं कृतवान्। एषां काल: षोडशशताब्दी (16 शताब्द्याम्) अस्ति ।अनेन विदुषा निरुक्तश्रौतसूत्रादिग्रन्थेभ्य: उद्धरणानि दत्वा याज्ञिकप्रक्रियाया: विधानं बोधगम्यतां नीतम्। स चायं विद्वान् महीधर: वैष्णवाचार्य: तन्त्ररहस्यज्ञ: वैदिकसाहित्यपारङ्गतश्च आसीत्। अनेन तन्त्ररहस्य विवेचको ''मन्त्रमहोदधिनामा ग्रन्थ: (1588 ई.) प्रणीत:।

उव्वटाचार्यात् पञ्चशतवर्षानन्तरमयमभवत्। नृसिंहस्य अयमुपासक आसीत्। यस्योल्लेखः अन्यग्रन्थेषु बहुशः उपलब्धोभवति।

- **आचार्य हलायुधस्य परिचयः-**

आचार्य सायणात् पूर्ववर्तिषु प्रधानाचार्येषु आचार्य हलायुध एव शुक्लयजुर्वेदस्य काण्वसंहितायामुपरि भाष्यं कृतवान्। अस्य भाष्यस्य नाम- ''ब्राह्मणसर्वस्वम्'' अस्ति। भाष्यरम्भे एव हलायुधेन स्वविषये किञ्चिद्वृत्तं लिखितम्। येन ज्ञातो भवति यत् बंगप्रदेशस्य अन्तिमाहिन्दूनृपतेः सुप्रसिद्ध लक्ष्मणसेनस्य व्यवहारमण्डपे धर्माधिकारिणः गौरवपूर्णपदे प्रतिष्ठापितः आसीत्। अस्य कालः (1170-1200) आसीत्।

अयं हलायुधः शैवदर्शनाचार्यः वेदमीमांसा मर्मज्ञः आगमपारङ्गमश्च आसीत्। अस्य कृतयः- ब्राह्मणसर्वस्वं, मीमांसासर्वस्वं वैष्णवसर्वस्वं शैवसर्वस्वं पण्डितसर्वस्वञ्चेति पञ्चग्रन्थाः प्रसिद्धाः आसन्। अस्तु।

एवमिह यजुर्वेदीय प्रसिद्धभाष्यकाराणां परिचयं प्रदाय अस्मिन् पत्रे वर्ण्यविषयाणां सारांशः प्रस्तूयते।

- **सारांशः- (विषयसंग्रहः)**

अस्मिन् यजुर्वेदविषयकेपत्रे यजुर्वेदसम्बद्धाः, प्रायः सर्वेविषयाः यथायथं समासशैल्या प्रस्तुताः सन्ति। तत्रादौ यजुर्वेदे इत्यस्मिन् पदे यजुः पदस्य कोऽभिप्राय इति जिज्ञासायाम् आचार्याणां मतमनुसृत्य समाधानं प्रस्तुवन् यजुर्वेदस्य महत्त्वं, सम्प्रदायद्वयं च सहेतुकं विवेचितमस्ति। यजुर्वेदस्यास्य शुक्लकृष्णभेदेन उपलब्धिर्भवति तत्र कारणं किमिति? अथ च एतत् सम्बद्धाः अनुपलब्धाः शाखा यथाग्रन्थं प्रमाणपुरस्सरं विलिख्य साम्प्रतंसमुपलब्धशाखानां नामानि च मया प्रदत्तानि। यजुर्वेदस्य प्रतिपाद्यविषयाः के ? इति जिज्ञासायाम् प्रति-अध्यायगत विषयाः अपि वर्णिताः सन्ति। यजुर्वेदीय सम्बद्धाः ब्राह्मणारण्यकोपनिषद्विशेषग्रन्थाः सपरिचयं, प्रतिपाद्यविषयसहितं च प्रस्तुताः सन्ति।

अनन्तरं यजुर्वेदीय भाष्यकाराणां च यथायथं परिचयं कृतिकालादिपुरस्सरं विधाय पत्रमिदं पूर्णतामेति।